मभिनिविष्टस्याकंठ्येनगातुमारब्धमेवमूर्छनामूर्छांकिमप्यत्यंतंविरहेणाक्षीणातरएवदीनात्तुकंप्यांगवल्लीयस्यास्तामेनामेवतंत्रीबुध्यावीणाभ
मेणवहुशोधिकंस्पृशतिविप्रलंभोद्दीपनादेतच्चित्रंमूर्छनापदार्थस्यशब्दधर्मस्यवीणायामेवाभिव्यक्तेरुचितत्वादित्यर्थः॥हेनाथगुरोःपित्रादेरा
ज्ञयानिर्यातोस्मिपरंत्वमीक्रूराग्रहादुष्टग्रहकार्यकारिणःकथंत्वयानविचारिताःकुमनर्थमुत्पादयिष्यंतीतिगणकंप्रतिपृष्टाः॥अमीकेतानाह॥
चूततरुराम्रोभास्वान्नवपल्लवैर्दीप्तिमान्सूर्यश्च॥मनसिजःकामोगुरुर्महान्वृहस्पतिश्च॥कोप्यनिर्वचनीयप्रभावएषपुरोवर्तीभृंगस्तमआं
ध्यसंपादकत्वाद्राहुश्च॥गंधवहोवायुर्मंदएतेनोद्दीपकतावेदिताशनिश्च॥मलयजश्चंदनंसितोजातात्शुद्धःशुक्रश्च॥माधवोवसंतोदोषाणां

तंत्रीबुद्ध्याकिमपिविरहक्षीणदीनांगवल्लीमेनामेवस्पृशतिबहुशोमूर्छनाचित्रमेतत्॥गुरुनिदेशाद्यथा॥भास्वांश्चूततरुर्गु
रुर्मनसिजःकोप्येषभृंगस्तमोमंदोगंधवहःसितोमलयजोदोषाकरोमाधवः॥अंगारोनवपल्लवः परभृतोविज्ञोबुधोराज्ञ
यानिर्यातोस्मिविचारिताःकथममीक्रूरास्त्वयानग्रहाः॥अभिलाषाद्यथा॥आगाराभिमुखंमुखंरचयतोर्वक्रीकृतग्रीवयो
र्व्यस्तंचोलमजानतोःक्वचिदपिव्याजासुनस्तिष्ठतोः॥

परपीडनादिरूपाणामाकरःस्थानंचंद्रश्च॥नवपल्लवोंगारोदाहकत्वान्मंगल
श्च॥परभृतःकोकिलोविज्ञोविशेषाभिज्ञःस्वरूपतोरुंतुदस्यकुह्वितिभणितस्यविरहिजनसंतापकारिचंद्रावसानपर्यवसायितयाभिज्ञ
तस्यामावास्यादिरूपार्थस्यप्रतिपादनमुखेनेष्टचिंतकत्वस्यस्वस्मिन्प्रख्यापनाद्बुधश्चेत्यर्थः॥क्वचिदेवदेवायतनादौप्रवृत्तसचक्षूराग
योःसंमर्दवशाच्चिरंविश्लिष्टयोर्द्वारभेदेनबहिर्निःसृतयोरन्योन्यमार्गावलोकनासक्तयोःकयोश्चिद्वायकयोर्मनोरथवर्णनमिदं॥अ
ग्रेगमनाशंकयापुरोगच्छतोरप्यंतरादेवायतनएवसमुदयत्संभावनयागाराभिमुखंमुखंवदनंरचयतोरतएववक्रीकृतग्रीवयोस्तेनैव

व्यस्तंव्यस्यस्ततयापिधेयपिधानासमंचोलमंगावरणवस्त्रम्जाननतोः क्वचिदस्थानेपिव्याजात्सुनर्मिषेणेवतिष्ठतोर्मार्गंगंतव्यमध्वानंवि
स्मरतोः क्वचित्क्वचिदपियत्रकुत्रापिविषयेत्यक्ताक्षरंलुप्तवर्णंजल्पतोरावयोर्यत्साचिवक्रंप्रेक्षितंमध्येमार्गेदैवसंघटितंप्रेमभरपूरितंच
सुषानिभृतपरस्परावेक्षणमभवत्तद्वयःपुनरपिवयमाशास्महेआवामाशास्वहेइत्यर्थः॥यथाहंत्वयितथात्वंमयीतिप्रकाशस्तत्किंवित्वंब
हिरितिद्वयोरप्याशयस्यप्रतिपादयितुंयुक्तत्वात्अस्मदोद्वयोश्चेत्यनेनहित्वविवक्षायामप्यस्मदोबहुवचनानुशासनात्॥यद्यप्येकत्व
विवक्षासाधारणमेवतदनुशासनंतथापिरसाभासापत्यानेकत्वमपिप्रकृतेविवक्षामर्हतीतिध्येयं॥अभिनवंचसुरागस्यजनयात्राप्रसंगप्र
वसमुत्पत्तेर्वर्णनस्यकविकुलक्षुण्णत्वादन्यादृशव्याख्यानेत्वागाराभिमुखंमुखंरचयतोरित्यस्यक्वचिदपिव्याजात्सुनर्मिष्ठतोरित्यस्यचसामंज

मार्गेविस्मरतोःक्वचित्क्वचिदपित्यक्ताक्षरंजल्पतोःसाचिप्रेक्षितमावयोर्यदभवद्द्वयस्तदाशास्महे॥ईर्ष्यातोयथा॥प्राणेशस्य
प्रभवतिमनःप्रेमहेमप्रसूनंचेतश्चूतंद्रगपिकमलंजीवनंबंधुजीवं॥आशासूत्रेग्रथितमखिलंवेधसातस्यभंगेस्यादेतेषाम
पिनिपतनंचंडिमानंविमुंच॥शापादस्येया॥अन्यत्रयदिनिर्गंतुमिच्छानिर्गच्छदूरतः॥ स्याभावादिति॥हेचंडिअत्यंतकोपनेमानमाग्रहं

विमुंचेतिसख्याउक्तिर्वेधसाब्रह्मणाखिलंसर्वमेतदाशासूत्रेप्रभवतिसमर्थंग्रथितंप्रोतमस्याशानियतसत्ताकंभवतीतिभावः॥तदेवा
हतस्येति॥तस्याशासूत्रस्यभंगेनाशेसत्येतेषामपिनिपतनंनिपातःस्यात्॥एतत्किंतदाह॥प्राणेशस्येति॥पार्थेतिकप्रेमालंबनस्यमनःप्रे
मात्मकस्नेहोहेमप्रसूनंस्वर्णपुष्पमत्यंतसंरक्षणीयत्वाच्चेतोंतःकरणंचूतमाम्रपुष्पंप्रियागंध्यनेकविधमनोरथशालित्वात्॥द्रगपिकमलंपा
थःपूरनिमग्नत्वाज्जीवनंबंधुजीवमस्थिरप्रसादत्वादित्यर्थः॥निर्गंतुपुनर्बहिर्यातुंजीवितुमितियावत्॥इच्छा॥यदीति॥अस्तितर्हीतिशेषः॥

द्दृत्तोनायिकामद्दृष्ट्वैव निर्गच्छ परावर्तस्व॥ अन्यत्र॥ पक्षांतरे प्रियां प्रत्यभिसरण इति यावत्॥ प्रियेति॥ प्रियायायो विरहस्त्वदीयविश्लेष
स्तेन जातोयस्तापः प्रज्वलनं तेन॥ अस्माकं प्रतापनमात्रस्य मोपितस्यास्तापस्त्वन्मुखावलोकनमात्रेणः प्रवर्द्धितस्तांप्रदग्धुसमतइत्या
शयः॥ शापदग्धः शापेनेव दग्धोभस्मसाद्भविष्यसि तथासंभाव्यसे प्रियासंभोगे यथामहापुरुषशापेन भस्मीभूतमात्मानं संभावयसि त्वया
हमपि प्रियानैकट्यमात्रेण शापमूलत्वदीयविरहानलेन तथाभूतं त्वां संभावयामीत्यर्थः॥ एतेन यद्यपि विरहपदबोधिते प्रकृतनायिका
विरहे शापहेतुकत्वाभावेपि शापसंभावनासंभाविते न्यनायिकाविरहे तथात्वमविकलमिति भवत्येवोदाहरणं॥ तथाप्यन्यत्रेत्यादिना वि
भावताव[illegible]दकरूपेण विभावस्याप्रतिपादनेन वियोगस्य भविष्यसीत्यनेन संभाव्यमानहेतुकत्वप्रतिपादनेन च बुद्ध्यनारोहादत एव चास्या

प्रियाविरहतापेन शापदग्धो भविष्यसि॥ समयाद्यथा॥ विश्लेषजीवनव्रीडापीडाविधुरमानसा॥ तस्यौ प्रातः प्रियं प्रेक्ष्य चक्रीव
क्रीकृताननाः॥

नुभावादेराक्षेपस्याप्यसंभवाच्चानुदाहरणत्वमाशंकमानाः परास्ताः॥ वियोगेपि जीवनसंभूतव्रीडाजनितपीडया वि
धुरमधीरं मानसं यस्याः सा विश्लेषजीवनाभ्यां व्रीडापीडाभ्यामिति व्याख्यानं तु विश्लेषपीडाया वक्रीकृतेत्यस्याननुगुणत्वादुपेक्ष्यं॥ त्व
याविना न जीवामीति प्रतिज्ञातवती काचित्कामिनी प्रियं विधावभ्युदिते समागमिष्यामीति दत्तसंकेतं॥ प्रातः॥ चंद्रोदयस्य द्रुतधावितत
या॥ यामिविधावभ्युदिते पुनरेष्यामीति यदुदितं भवता॥ जानासुदंतमात्रनेदं तत्त्वं न जानातीत्यादिवाक्येन परावर्तितं प्रातरागतं॥ एतेन
संकेतवैफल्यमुक्तं॥ प्रेक्ष्य विफलितसंकेतं मत्वा चक्रीव वक्रीकृताननेत्येकं पदं॥ चक्रीव चक्रवाकीव॥ एतेन यथा चक्रवाकी कपंजरे बलात्स
घटितं प्रियं प्रातः प्रेक्ष्य मुखमात्रं वक्रीकृत्य तिष्ठति तथेत्यर्थः सूचितः॥ वक्रीकृतमवक्रं वक्रं संपद्यते तथाकृतमाननं यया तथाभूता तस्थौ॥

एतेनसमयाकालविशेषादिस्यर्शपितावक्रवाकीवृत्तांताभिप्रायेणोदाहरणंमन्यमानानांतिर्यग्विरहवर्णनानौचित्यात्मामनस्तापोवि
सोयतइतिमंतव्यं॥ जीवनेसतिविश्लेषोविश्लेषेचसतिजीवनमप्यनयोर्द्वयोर्यूनामध्येहमेवनत्वन्यन्निदर्शनमुदाहरणमितिरामस्यो
क्तिः॥ यूनांदार्ष्टांतिकभूतानामितित्वयुत्पन्नप्रलापितमनादेयं॥ तथासतिबहुवचनप्रतिपादितबहुत्वान्वययोग्यानांबहूनांविवक्षि
तत्वात्पूर्वपूर्वेषामुत्तरोत्तरोदाहरणत्वप्रतीत्याहमेवेत्यवधारणासंगतेः॥ इतरासाधारण्यप्रतिपिपादयिषाविरोधाद्युक्तः सूर्यश्चंद्रः शी
तइतिवदप्रष्टार्थत्वापत्तेश्च॥ लंकानगरेकेलीगृहेवागृहैकदेशेवामणिमंदिरेवागृहस्यसर्वभागेवाप्रज्वालितोहुताशोग्निः शशामकि

दैवाद्यथा॥ जीवनेसतिविश्लेषोविश्लेषेसतिजीवनं॥ द्वयोरप्यनयोर्यूनामहमेवनिदर्शनं॥ विद्वराद्यथा॥ केलीगृहेवामणि
मंदिरेवाशशामलंकानगरेहुताशः॥ इतस्ततःप्रस्थितयोर्नयूनोर्वियोगजन्माविरराम वन्हिः॥ इतिरसनिरूपणेषष्ठस्तरंगः॥
हासस्यपरिपोषोहास्यः॥ वर्णोस्यशुक्लः॥ दैवतंप्रमथः॥ सचद्विविधः॥ स्वनिष्ठःपरनिष्ठश्चेति॥ यताचित्कालेनशांतोनबभूवेतस्ततो

यथानिर्गमंप्रस्थितयोःपलायितयोर्यूनोःपुमान्स्त्रियेत्येकशेषः॥ वियोगजन्माविरहोद्दीपितोवन्हिर्वन्हिस्तुनविरराम भयातिपातेनचिराद
प्यपरावर्तनादितिभावः॥ इतिश्रीजड्युपनामकगंगारामविरचितायांनौकाख्यायांरसतरंगिणीव्याख्यायांषष्ठस्तरंगः॥ ॥ हासंलक्षयति
॥ अस्यवर्णंदर्शयति॥ दैवतंदर्शयति॥ एवमग्रेपि॥ तंविभजते॥ स्वनिष्ठइति॥ स्वसमानाधिकरणविभावज्ञानमात्रापेक्षइत्यर्थः॥ व्यधिकरण
स्यापिविभावस्यज्ञानंसमानाधिकरणमेवेतिनकोपिदोषः॥ परनिष्ठेतिप्रसंगवारणायमात्रेति॥ अतएवनशृंगारद्वैविध्यसंभवइतिबोध्यं॥ तदुक्तं
॥ आत्मस्थोद्रष्टुरुत्पन्नोविभावेक्षणमात्रइति॥ परनिष्ठइति॥ अनुभावपर्यंतज्ञानद्वारास्वव्यधिकरणविभावज्ञानसापेक्षस्वसमानाधिकरण

स्वनिष्ठेतिप्रसंगवारणायसापेक्षांतं॥अतएवनरौद्रद्वैविध्यसंभवइतिबोध्यं॥तदुक्तं॥हसंतमपरंदृष्ट्वाविभावंचोपजायते॥योसौहास्य
रसस्तज्ज्ञैःपरस्थःपरिकीर्तितइति॥तावपिस्वनिष्ठपरनिष्ठावपि॥इतीति॥मिलित्वेतिशेषः॥एवमग्रेपि॥उत्तमानांस्वनिष्ठःपरनिष्ठश्च
हास्यःस्मितहसितभेदेनद्विविधः॥एवंमध्यमानांस्वनिष्ठःपरनिष्ठश्चहास्योविहसितोपहसितभेदेनद्विविधः॥एवमधमानांस्वनिष्ठःपर
निष्ठश्चहास्योपहसितातिहसितभेदेनद्विविधइतिद्वादशविधोहास्यइतिवक्तुमुपक्रमते॥अत्रद्वावप्यपिशब्दोपरस्परनिरपेक्षत्वलक्षणं

तावुष्युत्तममध्यमाधमभेदात्त्रिधेतिषड्विधः॥स्वनिष्ठोपिषड्विधःपरनिष्ठोपिषड्विधइतिद्वादशविधोहास्यः॥तथाहि॥उत्त
मानांस्वनिष्ठपरनिष्ठेचस्मितहसिते॥मध्यमानांस्वनिष्ठपरनिष्ठेचविहसितोपहसिते॥अधमानांस्वनिष्ठेपरनिष्ठेचाप
हसितातिहसिते॥उत्तमानामीषद्विकसितकपोलमव्यक्तदशनमपांगसुष्ठुवीक्षणंस्मितं॥उत्फुल्लकपोलंकिंचिल्लक्षित
दशनंहसितं॥मध्यमानांसमयोचितमुत्तमस्वनमाकुंचितमुखमाविर्भूतवदनरागंविहसितं॥उत्फुल्लनासापुटंकुटिलवी
क्षितंकुंचितग्रीवंस्फुटस्वनमुपहसितं॥अधमानामुद्धतमुद्यदश्रुकंपितमौलिस्फुटतरस्वनमपहसितं॥ प्राधान्यंसूचयतस्तदे

वोपपादयति॥स्मितंलक्षयति॥तदुक्तं॥ईषत्फुल्लकपोलाभ्यांकटाक्षैरप्यनुल्बणैः॥अदृश्यदशनोहास्योमधुरःस्मितमुच्यतइति॥हसितं
लक्षयति॥तदुक्तं॥वक्त्रनेत्रकपोलैश्चेदुत्फुल्लैरुपलक्षितः॥किंचिल्लक्षितदंतश्चहास्योहसितमिष्यतइति॥विहसितंलक्षयति॥तदुक्तं॥
सशब्दंमधुरंकालगतंवदनरागकृत्॥आकुंचिताक्षिवदनंविदुर्विहसितंबुधाइति॥उपहसितंलक्षयति॥तदुक्तं॥निकुंचितांसशीर्षश्चजिह्मदृष्टि
विलोकनः॥उत्फुल्लनासिकोहास्योनाम्नोपहसितंमतइति॥अपहसितंलक्षयति॥तदुक्तं॥अस्थानजःसाश्रुदृष्टिराकंपस्कंधमूर्धजः॥शार्ङ्गदेवेनगदि
ताहासोपहसिताख्यइति॥अतिहसितंलक्षयति

तदुक्तं॥ स्थूलकर्णकृदुध्मानो वाष्पपूरप्लुतेक्षणः॥ करोपगूढपार्श्वश्च हास्योऽतिहसितं मतमिति॥ पद्मभूर्ब्रह्मा लेखनी मितइतउभयोरपि पार्श्वयोः विलोकयन्कुत्रकुत्रनजगाम किं किं न ददर्श श्रवणसीम्नि लंभिता मवतंसीकृतां तां पुनः प्राप्य सन्नतमुखः सन्नतं कपोलविकासप्रतिबंधकचेष्टाव दाननं यस्य तथा॥ सन्नतमुख इति प्रथमांतपाठे त्वध्याहृतपूर्वक्रियाकर्तृविशेषणसमर्पकमेतत् स्मितं दधाविलर्थः॥ अत्र व्यंजकतावच्छेदक वैजात्यादुद्भिरंस्यपि स्मितादिपदानि न यंम्यतावच्छेदकानिवमंति॥ तथा तत्याविधलेखनीब्रह्मगतहास्यालंबनं न वासौ साश्रयस्तस्युदाहर णसंमतिः॥ सोयं वै सर्वं व्योमगतं श्मश्रुद्वारे निर्भिद्य नांगगनतलदर्शयरदाग्रं व्योमांकुरमुदीरयत्तथा संभाव्य विस्रोयद्धास्यमुग्रद्युत्यप्रतिब

अत्युद्धतं बहलाश्रुस्फुटतमस्वनमाश्लिष्टपार्श्वजनमारब्धकरतालमतिहसितं॥ स्वनिष्ठं स्मितं यथा॥ लेखनीमितइतो विलोकयन्कुत्रकुत्रनजगाम पद्मभूः॥ तां पुनः श्रवणसीम्नि लंभितां प्राप्य सन्नतमुखः स्मितं दधौ॥ स्वनिष्ठं हसितं यथा॥ व्योमांकुरं व्योमगतं रदाग्रमुग्रद्युति सोयमुदीरयन्विस्रोः॥ यदा सहास्यं किमुत तस्य योधाव द्यापि फेनस्तवकायमानं॥ परनिष्ठं स्मितं हसितं च यथा॥ हरवृषभमुखे सखेलमायोजयति सुवर्णसवर्णकांतिपर्णे॥ दृशि भुजगपतेः शिशुः षडास्यः कलयति कज्जलमंतिके भवा

दृग्दृशानव्यक्त्यासतत्त्वयोधौ सोर्णवेद्यापीदानीमपि फेनस्तवकायमानं पुंजीभूतफेनरूपतया परिदृश्यमानं किम्वित्यर्थः॥ एकोक्तेव परनिष्ठमेतद्वद्वयमुदाहरति॥ षडास्यः शिशुः स्वामिकार्तिको हरवृषभमुखे नंद्यास्ये सुवर्णस्यादिसुवर्णेन सवर्णासमानवर्णा कांतिर्यस्य तस्य पर्णं भवान्या अंतिके समसं सखेलं सकौतुकं यथा स्यात्तथा योजयस्तु पनयति॥ भुजगपतेः शेषस्य दृशि कज्जलं कलयस्यत्रापि सखेलमित्यनुषज्जते॥ तेनलक्षणलक्षितता वगमः॥ इत्तद्दृत्यर्थः॥ अत्र पर्णव्यापारेण हसंतं षडास्यं दृष्ट्वा भवान्याः स्मितमभूदंजनव्यापारेण हसंतं तं दृष्ट्वा तस्याः स्मि

स्थादुद्धरणे नैवस्वनिष्ठ उदाहृतो भवति स्वाश्रयालंबनत्वस्य तल्लक्षणत्वादित्याशयेन तमेव भेदमुदाहरति॥ तरुण्यो निशासु तैलस्य
धियागृहीतैर्मषीजलैर्लिप्तमुखारविंदं गोपं प्रभाते स्खलदश्रुनीरं निष्पतद्बाष्पजलमधीरनादं प्रव्यक्तकंठध्वनि च यथा भवति तथा जहसुर्ह
सितवत्य इत्यर्थः॥ अत्र बहुवचनात्परनिष्ठता॥ मयाप आग्रह आरब्ध इति तास्यैकं पद्यं योनिरोध इति पदघटितं वाक्यं पठन्बुधो योनेरोध इ
ति जुगुप्सितार्थप्रतिपादकं मत्वा शम्बदित्यादि निरंतरश्वाससभरोच्छूननासापुटेन तटस्थेन तेनाप्युपहस्यत इत्यर्थः॥ वारवधूर्वेश्या रतो
त्सवे केलिवेलायां कंठावलग्नं वल्लभयज्ञसूत्रमुपवीतं॥ अत्र चालंबनोद्दीपनाश्रयाणां त्रयाणामपि प्रतीतिरिति विशेषं ध्वनयितुं कि

परनिष्ठं विहसितं यथा॥ निशासु तैलस्य धियागृहीतैर्मषीजलैर्लिप्तमुखारविंदं॥ गोपं प्रभाते स्खलदश्रुनीरमधीरनादं जह
सुस्तरुण्यः॥ परनिष्ठमुपहसितं यथा॥ योनिरोधो मयारब्ध इति पद्यं पठन्बुधः॥ शम्बदुत्फुल्लनासेन तटस्थेनोपहस्यते॥ पर
निष्ठमपहसितं यथा॥ रतोत्सवे वल्लभयज्ञसूत्रं कंठावलग्नं परिमोचयंती॥ द्विजांगना दीर्घतरं श्वसंतीं तारस्वनं वारवधूर्जहा
स॥ परनिष्ठमतिहसितं यथा॥ चोरः कामरिपोर्गृहं निशि गतः शूलं कपालं हरन्बीजं धूर्तफलस्य तंडुलधिया नीत्वा पुनर्भुक्तवान्॥
व्यावल्गन्नवचलन्स्खलन्परिपतन्मुह्यन्विघूर्णन्हसन्नट्टाट्टध्वनिमुक्तमौलिकुसुमं सर्वैश्चयाहस्यते॥ यां विशिनष्टि॥ दीर्घतरमिति॥ श्व

संतीं हसंतीमिति यावत्परिमोचयंतीं कांचिद्द्विजांगनां ब्राह्मणवधूं दृष्ट्वेति शेषः तारस्वनमुच्चैर्घोषं यथा तथा जहास हसति स्मेत्यर्थः॥ सर्वैश्चया
शूरोभिर्निशि कामरिपोः शिवस्य गृहं गतः शूलं कपालं च हरन्धूर्तफलस्य धत्तूरस्य बीजं तंडुलधिया नीत्वा पुनस्तदर्थं भुक्तवान्॥ अत एव व्यावल्गन्नि
शौलितः सन्नवचलन्नवनस्खलन्नुद्धचरणः सन्भूमि पतंल्लुठन्मुह्यन्विस्मृतारंभः सन्विघूर्णन्विचित्तो भवन्हसन्निरालंबहास्यं कुर्वन्सौराट्टाट्टध्वनिनि

मुक्तकंठं मुक्तमौलिकुसुमं निपतच्छिरोगुंफितपुष्पं च यथा स्यात्तथा हस्यते हा सा समदीक्षिपत इत्यर्थः॥ अत्र लेकत्वा विवस्वया प्राग्वदेवदृष्टपु
रुषाक्षेपादुत्तरवद्देववापरनिष्ठत्वमवगंतव्यं॥ करुणलक्षयति॥ परिपोषो भग्नावरणविद्वेशिष्टं च तत्र विनिगमनाविरहाच्छोकावच्छिन्न
भग्नावरणविदोपि करुणत्वे शोकासाधारणकार्यीभूतसर्वेंद्रियक्षोभस्याप्यवच्छेदकत्वं विनिगमकाभावेनानीयमानमनिवार्यमित्यनंतःक
रणवृत्तेरपि तथात्वमभिधत्ते॥ अत एव क्लेशाद्धाकारोत्रास्वरसूचकः॥ एतदभिप्रायेणैव चादावुत्तरलक्षणेनि प्रलंभाति प्रसंगमपसार्य
प्रथमलक्षणप्रविष्टशोकपदमनंतरं व्याख्यातं॥ एवमेव चोत्तरत्रापि वैकल्पिकपक्षांतरसमुपन्यासोव्याख्येयः॥ तं विभजते॥ अत्र बंधनाद्यु

शोकस्य परिपोषः करुणः॥ आशाविच्छेदे सति सर्वेंद्रियक्षोभो वा॥ न च विप्रलंभे तिव्याप्तिः॥ तत्रेष्टाशायाः सत्वात्॥ तद्धिच्छेदे तु स
विप्रलंभः करुण एव॥ शोको दुःखं॥ वर्णोस्य कपोतचित्रितः॥ दैवतं वरुणः॥ स च स्वनिष्ठः परनिष्ठश्च॥ स्वशापबंधनक्लेशानि
ष्टैर्विभावैः स्वनिष्ठः॥ परेष्टनाशशापबंधनक्लेशादीनां दर्शनस्मरणैर्विभावैः परनिष्ठः॥ स्वनिष्ठो यथा॥ तव नाथ शरः शरासनं तव
देहेन सहैव भस्मसात्॥ अहमस्मि न तः प्रतीयते तव नास्मीति किमुच्यतामितः॥

पाधीनां शोकविभावत्वे स्वसमानाश्रयालंबनत्वं स्वनि
ष्ठत्वं स्वव्यधिकरणालंबनत्वं च परनिष्ठत्वं॥ बंधनकर्मीभूताद्युपधेयानां तथात्वमिति सिद्धांते तु स्वाश्रयालंबनत्वं स्वाश्रयान्यालंबनत्वं च परनिष्ठ
त्वं वाच्यं॥ न चैवं बंधनाद्युसनादिति भरताचार्योक्तिविरुद्धमिति वाच्यं॥ बध्यमानस्यापि बंधनं विना न करुणविभावत्वमित्यर्थध्वननायैवत
योक्तेरेवं सर्वत्र विभावेष्वीति रनुसंतव्यात दुक्तं मंमटभट्टैः॥ व्याघ्रादयो विभावा इतीत्यभिप्रेत्याह॥ हे नाथेत्यत्र वास्तविकत्वसंबंधभाक् शरः
शरासनं वा तव देहेन सहैव योगपद्यायोगव्यवच्छेदरूपैवकारार्थः॥ भस्मसाद्भस्मीभूतमभूत्॥ अहमस्मि न तु भस्मीभूता न नो भस्मीभावाभावा॥

तवनास्मित्वदीयसंबंधभाङ्भवामीतिप्रतीयतेआक्षिप्यतेइतएवंविधनिश्चयानंतरंकिमुच्यतांमांविहायकथंपरलोकपथिकोभूरिति
किंवक्तव्यमित्यर्थः॥वनमालस्यानुयांतंबाष्पवारित्यजंतंमृदितेत्यादिम्लानसरोजमालाकृशांगीमालोच्यदिनमपिश्चेतनसंताप
कैमुत्यमाह॥रवीतिसौरप्रचंडातपलक्षणंतापमार्तिज्वरमंतमध्यन्हइत्यर्थोस्यसूतेप्रकटयतिवस्तुतस्त्वंतःपदसमभिव्याहृततापप
दमेवज्वररूपकपरमित्यलंक्लिष्टकल्पनया॥रजनिरपिचतारकेतितारकालक्षणान्बाष्पबिंदून्धत्तेपुष्णातीत्यर्थः॥रौद्रंलक्षयति॥प्रागुक्त
युक्त्यालक्षणांतरमाह॥व्याख्यातत्वमेतत्॥ननुदेवतयाभेदाध्यवसायात्तदीयवर्णेनरसेवर्णाध्यवसायइतिप्रागुक्तंरुद्रस्यचकृपूर्वव

परनिष्ठोयथा॥अनुवनमनुयांतंबाष्पवारित्यजंतंमृदितकमलदामक्षाममालोच्यरामं॥दिनमपिरविरोचिस्तापमंतःप्रसूते
रजनिरपिचधत्तेतारकाबाष्पबिंदून्॥परिपूर्णःक्रोधाद्रौद्रः॥सर्वेंद्रियाणामौद्धत्यंवा॥वर्णोस्यरक्तोदैवतंरुद्रः॥यथा॥चंडां
शुःकिंनचक्रंभुजगपतिरसौवर्ततेवानपाशःकुंताःकिंदंतिदंतानचगिरिरशनिःकिंनशस्त्रैःकिमन्यैः॥ लोवर्णःस्मर्यतेतत्कथं

रौद्रस्यरक्तोवर्णइतिचेत्सत्यं॥यादृशांतःकरणवृत्तिकालेयोदेवतायावर्णोनुभूयतेतेनवर्णेनरसस्यवर्णवत्ताध्यवसीयतेतथाचक्रोधाविष्ट
स्यरुद्रस्यापिवर्णोरक्तोभवतिसकलानुभवसंवादिप्रमाणमूलककल्पनायाअपिप्रामाण्यात्॥स्मर्यतेचकोपेनचास्यास्यवदनंमषीवर्णमभूत्
देतिक्रोधसमावेशेवदनलौहित्यंदेवतायाअपिमषीरंजेतिभाषितेतिनानुपपन्नमितिगंधोपि॥चंडांशुःसूर्यश्चक्रंकिंनेत्यत्वेरूपयाकाकेदमेनसु
लभंचक्रमितिविपरीतार्थोगम्यतेएवमग्रेपि॥असौधराधारोभुजगपतिःशेषःपाशोवानवर्ततेदंतिदंताःकुंताश्चकुंतायुधानिनगिरिरशनिः
किंनान्यैरेतद्व्यतिरिक्तैःशस्त्रैःकिमलमहंभीमोनान्यसाधारणकर्मानरणेभीमवाक्यमितिनोपन्यस्तमितिसंप्रदायः दृष्टेतिदुर्जनस्यदुर्योधन

समारणार्थं सम्यगुन्नतीकृतो दंडो यत्र तादृशो बाहुप्रकांडो भुजरूपावयवो यस्य तादृशः। प्रत्यावृत्तेति पुनरुद्दीप्तः प्रकोपएव प्रलयकालि कानिर्यस्य तादृशः कस्यापि वश्योधीनो नास्मीत्यर्थः॥ ननु व्यंग्यस्य क्रोधस्य प्रकोपपदेन वाच्यीकरणदोषात्कथं रसोदाहरणमेतदिति चेन्निरवधानोसि॥ रसदोषेपि रसानपायादित्युक्तत्वादुदाहरणताया अक्षतेः॥ तथापि निखिलव्यंजकसमधानमात्रादेव समुल्लसंत्यां व्यंजनायां पुनर्व्यंग्यस्य वाच्यीकरणं कापेयकल्पं तदिमं दोषमसहमान उदाहरणांतरमाह॥ वयंक्रीडेत्यादि क्रीडायै शरैः क्रीडितुं तुंगा उच्च तरा ये तुरंगा अश्वास्तेषां टापाः शफास्तेषां पटलीभिः खर्वीकृता लघूकृताः क्षुण्णाः इति यावत् ये उर्वीधरा नगास्तेषां श्रेण्याः स्फूर्जिताभिः प्रादुर्भू ताभिर्धूलिधारणीभिः रेणुपंक्तिरूपैस्तमस्तोमैरंधकारपटलैरवलीढं जगत्सामंतसैन्यादि बद्धेति॥ भोगीश्वराणां देव्यमम्ययंनोपेहस्ति

भीमोहं दुष्टदुर्योधननिधनसमुद्दंडबाहुप्रकांडः प्रत्यावृत्तप्रकोपप्रलयदहनवह्नोनास्मि कस्यापि वश्यः॥ यथा वा॥ क्रीडातुंग तुरंगटापपटलीखर्वीकृतोर्वीधरश्रेणीस्फूर्जितधूलिधारणितमःस्तोमावलीढं जगत्॥ बद्धस्पर्द्धकरींद्रवृंदचरणव्याभुग्नभो गीश्वरव्यग्रोदग्रफणाग्ररत्नरुचिभिर्विद्योतयामो वयं॥ परिपूर्णउत्साहः॥ सर्वेंद्रियाणां प्रहर्षो वा वीरः वर्णोस्य गौरः देवतं शक्रः॥

समुदायस्य चरणादीर्घदीर्घा इति यावत्॥ यत्तु बद्धस्पर्द्धानां रिपूणां करींद्रा इति व्याख्यानं॥ तस्य क्रमभंगाद्भोगीश्वरनमनानुगुणत्वानायक प्रतिनायकयोः संपत्सुत्कर्षापकर्षयोरभिमतमति प्रतिहं हिमतिकारकत्वाच्चोपेक्ष्यं॥ तैर्व्याभुग्नानां भारभयान्नम्रीकृतानां भोगीश्वराणां धराधारभूतानां व्यग्राभिश्चलिताभिरुदग्राणामुल्लशनां फणारत्नानां रुचिभिः पर्वतचूर्णनसंजातविवरनिःसृताभिरिति गूढाभिसंधिः ॥ विद्योतयामः प्रकाशयाम इत्यर्थः॥ अत्र चक्रवेरन्यस्य वा बुद्धिस्थत्वाभावाच्चूर्णिकाकृताकृतवद्भवतीति बोध्यं॥ वीरं लक्षयति॥ उक्तवृत्त्या लक्ष्यं

उत्साहवैलक्षण्यं कारणवैलक्षण्याधीनमिति तदाह॥ तमेव विशेषं दर्शयति॥ एवं वक्तृतर निबंधनिरीक्षणादिप्रभवविलक्षणोत्साह
परिपोषात्मकपांडित्यादिवीरा अप्यतिरिच्यंतामिति चेदतिरिच्यंत एवेति पुनः सप्रपंचमुपपादितप्रायमधस्तात्॥ एतेषामुदा
हरणानां गर्वादिध्वनित्वमभ्युपगच्छद्भिः कथंकारं युद्धादिवीराणां सर्वरसानामेव वा तेषां तत्तद्व्यभिचारिध्वनित्वं नाभ्युपेयते॥ स्यापि प्र
तीतिस्तु समानयोगक्षेमैवेति नायं पंथाः॥ दशमुखे रावणे संग्रामांगणं युद्धभूमावागते स्थिते सति सौमित्रिणा विस्मितं॥ अद्यैव कृतकृत्या
भविष्याम इति हर्षात्॥ सुग्रीवेण विचिंतितं॥ कथमहमेवैनं निहत्य श्रीरामस्यानृणीभविष्यामीति चिंताविषयः॥ हनुमता व्यालोलं रामर

सच त्रिधा युद्धवीरदानवीरदयावीरभेदात्॥ इयांस्तु विशेषः॥ स चोत्साहो युद्धवीरे प्रतापाध्यवसायादिप्रभवः दानवीरे दा
नसामर्थ्यादिप्रभवः दयावीरे आर्द्रतादिप्रभवः॥ युद्धवीरो यथा॥ संग्रामांगणमागते दशमुखे सौमित्रिणा विस्मितं सुग्रीवेण
विचिंतितं हनुमता व्यालोलमालोकितं॥ श्रीरामेण परं तु पीनपुलकस्फूर्जत्कपोलश्रिया सांद्रानंदरसालसानि दधिरे बाणा
सने दृष्टयः॥ दानवीरो यथा॥ अभ्यागच्छति मंदिरं द्विजकुले खंडाय खंडानुपिंस्मारा ब्धिं लवणाय दुग्धजलपिं दुग्धाय चद्रा स्वाति॥

वण योद्धे योरपि युगपच्चक्षुःसंचारं यथा स्यात्तथा लोकितं॥ श्रीरामेण त्वं त्वं चेदेनं वध्यापातयिष्यामीत्यालोकनाशयः॥ श्रीरामेण तु बाणासने दृ
ष्टयः परं निर्दधिरे स्थापिताः॥ कीदृशेन रामेण पीनेत्यादि॥ उत्साहकार्यांगपुष्टिभाक्॥ तया पुलकैः स्फूर्जंती कपोलश्रीर्यस्य तेनेत्यर्थः॥ किंभूता दृ
ष्टयः सांद्रेति निबिडानंदात्मके न रसेनालसा इत्यर्थः॥ अत्रेदं कवेरुक्तिसौष्ठवं॥ यत्पूर्वार्द्धे व्यालोलादिपदसमभिव्याहारे वा हनुमदादिनिष्ठा परिपु
ष्टि उत्साहस्तथा नरार्द्धेऽपुपरिपूर्णो सोऽप्रतीयत इति स्यापि भावसंकीर्णे रसोदाहरणमेतद्रसोदाहरणस्यापि भावोदाहरण वा विशेषावगतये समुपन्य

यद्वा ब्राह्मणकार्यसंपादयितुं वपुः शरीरं यस्य तादृशाय परमपुरुषायेति यावत्॥ तस्मै रामायनमोस्तु तस्मै कस्मै दिव्यापगा गंगा इति भियेव
दीनासती यस्यांघ्रिं न जहाति न त्यजति॥ इतीति किं॥ द्विजकुलेर्थिसार्थ मंदिरं निजसदनमभ्यागच्छत्यतिथितां गतस्सतिरामस्त्वं वडवाग्नेः
इं संपादयितुं खंडांबुधिर्खंडसमुद्रं न या लवणायसारा भिसारार्णवं दुग्धायदुग्धजलधिं दुग्धसागरं दास्यति विप्रस्यालंकरिष्यति न हि मम
विरहः प्रियविश्लेषाद्दुर्वारो प्रतीकारो भवेदितीत्यर्थः॥ परदूषणकथा रसिका अर्वाञ्च स्तु राम विषयकविगतरति भावांग न पैव दानवीरः प्र
मीयते इति कथं रसोदाहरणमेतदिति॥ तद्भ्रमसाभिधानं॥ यतो वांतरवाक्यार्थबोधपूर्वकोत्र श्लोके महावाक्यार्थबोधो विवक्षितः॥ न हि
न हि पदघटितोत्तरवाक्यार्थबोधस्तर्हि पदार्थबोधं विना भवति॥ नवा तर्हि पदार्थबोधः पूर्ववाक्यार्थबोधं विनैव भवितुमीष्टे॥ प्रकारांतरेण

दुर्वारो विरहो भवेदिति भियादीनेव दिव्यापगा यस्यांघ्रिं न जहाति विप्रवपुषे रामाय तस्मै नमः॥ दयावीरो यथा॥ दयाबीजं हरेर्ने
त्रमंकुरस्तत्र भास्करः॥ ततः समुच्छ्रितावेनोपल्लवो रामलक्ष्मणो॥ गुरुशिक्षादिना तर्हि पदार्थबोधांगीकारे पूर्ववाक्यवैयर्थ्यापत्तेः॥

अत एव शब्दालोके वाक्यार्थकर्मके कुलकादौ चावांतरवाक्यार्थबोधनियमो महावाक्यार्थबोधसमर्थितः पक्षधरमिश्रैः॥ तदेवं पूर्वोत्तरवाक्या
र्थबोधयोः पौर्वापर्ये जागरूके प्रधानतया पूर्ववाक्यार्थप्रतीतिदशायामुदाहरणेत्रात्र बुद्ध्यारूढे पाश्चात्यांगभावो किं विलंब इत्याशयात्
॥ हरेर्विलोचनेत्र दयायाबीजं असाधारणं कारणं॥ अत्र दयापदशक्यैकता विशेषातिरिक्त एव व्यंग्य तथाभूत दयावीरोत्साहगमकोरसणादिरु
पत्यापारो दयापदार्थ इत्याशयान्नवमनाख्यो दोषः॥ तत्र बीजेंकुरो भास्करः जायत ततोंकुरादेतौ रामलक्ष्मणौ पल्लवावभूतामित्यर्थः॥ अत्रेद शा
पल्लवारोपानुगुणानुभावानुभावितो गम्य जगद्विभावितो गम्योत्साहचिंतादिसंचारितो दयावीरो त्साहोव्यंग्य इत्युदाहरणसंगतिरित्यास्तां ताव

यथा स्मत्कृतरसमीमांसायां॥ हुंवारवं गुरो गौः प्ररूढ सिंहां दिलीप आवेक्ष्य॥ आनर्तितभुपुटकः स्वयमपतत्क्षणपिंडइव॥ नवाद्यो
नवीरइतिसांप्रतं॥ विनिमयेह्यस्मिन्दानत्वासंभवात्॥ भयानकं लक्षयति॥ लक्षणं तरमाह॥ विभजते॥ अत्रापि प्राग्वदेव स्वसमाना
धिकरणविभावालंबनत्वंस्वाश्रयालंबनत्वं वा स्वनिष्ठत्वमित्याशयेनाह॥ स्वनिष्ठादित्यादिः॥ शिशुवपुर्देवः श्रीकृष्णः गोपीक्षादिगोपांग
नानां क्षीरसंभृतघटीसंबंधिविलुंठनफलकस्वीयव्यापारविषयककथाभिज्ञयोः पित्रोर्नंदयशोदयोः कर्तृविषयीताडनान्वितस्वार्थ
मभिधत्ते ताडनस्य शंकासंभावनेन तेन ज्वरं प्रकाश्य गात्रप्रकंपादिनाभिनीयसायं तमसि प्रसर्पति सति गृहं समागच्छति॥ तमभिनय

भयस्य परिपोषः॥ सर्वेंद्रियाणां विक्षोभो वा भयानकः॥ वर्णोस्य श्यामः॥ दैवतं यमः॥ स च स्वनिष्ठः परनिष्ठश्च॥ अपूर्णभव
निष्ठो यथा॥ गोपीक्षीरघटीविलुंठनविधिव्यापारवार्ताविदोः पित्रोस्ताडनशंकया शिशुवपुर्देवः प्रकाश्य ज्वरं॥ रोमांचं रचय
न्दृशौ मुकुलयन्स्रस्तांगमुत्कंपयन्सीत्कुर्वेस्तमसि प्रसर्पति गृहं सायं समागच्छति॥ परनिष्ठो यथा॥ गंगायाः सलिले निमज्ज
ति जटाजूटे परिभ्राम्यति भ्रश्यत्यस्मिन्हुताशने फणिफणाभोगे क्वचिल्लीयते॥ मेव विशेषणचतुष्टयेनाह॥ रोमांचमिति॥ विवक्षी

करणसंभूतशीताद्युत्थं रचयन्ज्वरसंभूततया बोधयन्दृशौ मुकुलयन्ज्वरस्यासह्यवेदनत्वमुद्भावयन्स्रस्तांगमुत्कंपयन्निभृतप्रपन्नसाध्यं
कंपंज्वरसाध्यतया प्रतिपादयन्नेतदनुगुणतयैव सतिसप्रस्यं तमुपन्यस्तं सीत्कुर्वन्नुसंश्वासेनापूरयन्नित्यर्थः॥ स्वव्यधिकरणविभावालंब
नत्वं स्वाश्रयान्यालंबनत्वं वा परनिष्ठत्वमित्याशयेनाह॥ परनिष्ठ इत्यादित्यादिः॥ बालः कलावशिष्टस्तुषारद्युतिर्हिमांशुः राहोरास्यमुद्वी
स्य किं कीदृक्साहसं न कुरुते नानुविष्ठति॥ नसाहसमनारुह्य नरो भद्राणि पश्यति॥ साहसे च समारूढे यदि जीवति पश्यतीति शास्त्रादिति

गंगायायुनद्याःसलिलेनिमज्जतिजटाजूटेहरस्येत्यनुषज्यते॥एवमग्रेपि॥परिभ्राम्यति॥अस्मिन्हुताशनेभश्यतिस्खलतिफणिफ
णाभोगेकविंदतरंगतेलीयतेंतर्भवतिकुब्जीभूयशरीरंप्रवेशानुगुणीकृत्यहरस्यकर्णसुषिरंविवरंनिर्गंतुमुत्कंठतइत्यर्थः॥परकृता
दित्यादिः॥दशमुखेदशभिर्मुखैर्नादंकुर्वाणेसतिसुरैर्देवैःकंपितंदिङ्नागैरैरावताद्यैश्चकितंहरेस्तुर्यस्यहयैस्तप्तसंख्याकैरपि॥अत्रके
चित्॥एकोअश्वोवहतिसप्तनामेतिश्रुतेर्बहुवचनानुपपत्तिरिति॥तत्रब्रूमः॥एकस्मिन्नश्वेसप्तपदरूढिप्रविपादिकाश्रुतिर्नोश्वैक
त्वमवधारयति॥सप्तयुंजंतीतिश्रुतेः॥परस्परभेदप्रसक्तगतिवैरूप्यपरिहारार्थंवैकत्वमुक्तीतितमिति॥अतएवरथस्यसप्तयःसप्तेति

कुब्जीभूयहरस्यकर्णसुषिरंनिर्गंतुमुत्कंठतेयद्धोरास्यमुदीक्ष्यकिंनकुरुतेबालस्तुषारद्युतिः॥विकृतनिनदास्यरनिष्ठाय
या॥कुर्वाणेदशभिर्मुखैर्दशमुखेनादंसुरैःकंपितंदिङ्नागैश्चकितंहरेरपिहयैरुस्तुकमाधावितं॥सुग्रीवस्तुसमुच्छलज्जल
निधिव्यालोलवीचिभ्रमिभ्रश्यत्सेतुविशंकयाहनुमतोवक्त्रेदृशौसंदधे॥ सप्तसप्तिपदंविवृण्वतेबहवःश्रुत्यर्थदर्शिनः॥उत्पुकं

ऊर्ध्वपुच्छंयस्मिन्कर्मणियथाभवतितथेतिस्वभावोक्तिःसमंतादाधावितंसुग्रीवःपुनःसमुच्छलतोतिसुव्यस्तज्जलनिधेर्व्यालोलावेगवत्तरादू
तियावत्वीचयोलहर्योभ्रमयआवर्तास्ताभिर्भ्रश्यतःसेतोर्विशंकयासेतुभ्रंशाशंकयेतियावत्हनुमतोवक्त्रेदृशौसंदधेयोजयामासेत्यर्थः
॥केचित्त्वत्रसुग्रीवेणात्यग्रेचसंदधेइत्यत्रयोजितेइतिपाठंकल्पयित्वाप्रक्रमभंगमुद्दिधीर्षंति॥तन्न॥भावकर्मप्रत्ययकृतस्यास्यतावतोप्य
नुद्धारात्॥वयंतुब्रूमः॥पूर्वार्द्धेआकस्मिकस्त्रासउत्तरार्धेसंभावनापूर्वकंतिङर्थप्रयत्नप्रतिचिकीर्षितंभयमित्यनयोर्विशेषावगतयेसम
र्थःप्रक्रमभंगोंगीकृतोनदूषणमिति॥एतेनसुग्रीवस्येतिसुग्रीवेणेत्येववातएवाग्रेकर्तृकरणतृतीयाभेदेनव्यवस्थितस्यवक्त्रेदृशासंस्थित

विशेषणनिरर्थकप्रायत्वे प्रसक्तस्याप्रकृतार्थत्वदोषस्य तत्ताभिप्रायत्वमात्रेण परिहारवत् यथाश्रुतपाठे प्रसक्तस्यास्य तस्मिन्नेव निरुक्ततात्पर्यग्रा
हकत्वमात्रेण परिहारेपि सामंजस्यसंभवात्॥ बीभत्सं लक्षयति॥ लक्षणांतरमाह॥ विभजते॥ स्वसमानाधिकरणविभावालंबनत्वं स्वाश्र
यालंबनत्वं वा स्वनिष्ठत्वं स्वव्यधिकरणविभावालंबनत्वं स्वाश्रयान्यालंबनत्वं वा परनिष्ठत्वं प्राग्वदिहापि बोध्यं॥ भार्गवो बद्धेति स्पष्टो शीला
नां शाम्बुवर्गाणां रुधिरसंभूतायाः स्रोतस्विन्या नद्याः स्रोतसि प्रवाहे भ्रश्यति पतत्सु द्रुमतिमुह्यति॥ अथेति किंचेत्यर्थः॥ स्खलति स्खलितं
धत्ते॥ कीदृशो भार्गवो रणेति॥ संग्रामगुणक्रोधत्य ग्रद इत्यर्थः॥ कथंभूते स्रोतसि कालीत्यादि॥ योगिनीविशेषयाः कुतूहलेन कौतुकेन पर

जुगुप्सायाः परिपोषो बीभत्सः॥ सर्वेंद्रियाणां संकोचो वा॥ वर्णोस्य नीलो देवतं महाकालः॥ स च स्वनिष्ठः परनिष्ठश्चेति॥ स्वनिष्ठो यथा
॥ काली कुंडलिनी कुतूहलमिषः प्रारब्धथूथूत्कृतिन्यंचद्दृष्टिविचलद्दिहायमिवलक्षिप्तशीनिपातस्पृशि॥ बद्धस्पर्द्धविपक्षपक्ष
धिरस्रोतस्विनीस्रोतसि भ्रश्यत्सु द्रुमतिस्खलत्यथ रणक्रोधाकुलो भार्गवः॥ परनिष्ठो यथा॥ कृत्तं कुंभींद्रकर्णे विरचयत तनुतं चाम
रं व्यालपुच्छैर्मालां मुंडैः प्रचंडैः सृजगजजघनैर्मंडपं योजयस्व॥ ७ ॥ स्वारंप्रारब्धा थूथूत्कृतिर्निष्ठीवनशब्दानुकरणमेतत्सं फू

त्कृतीति काचित्कः पाठः पुकतरस्तयान्यं चं स्योपावीच यस्तासु चलद्दिहा योगगनताराः स्ता स्थ्या युत्र तादृशि॥ पुनः कीदृशे तस्मिन्॥ व
लदिति॥ वलतां नाडिलीनां निपातः परिपतनं तद्भागीत्यर्थः॥ कुंडलिन्याः प्रेतमुख्यायास्तनयेत्यादि॥ वनपस्य पुत्रस्य यः परिणयो
विवाहस्तदीयप्रारंभाज्जन्म यस्य तादृशः प्रेतेत्यादि प्रेतेषु वृद्धा जरठा या अंगनाः स्त्रियस्तासां प्रायेणैवंविधकार्ये प्रौढीणा प्रगल्भते
तिदृष्टत्वादंगनाग्रहणं इत्येवं विधआलापउद्घोषो बभूव जातः॥ दृतीति किं॥ कुंभींद्रकर्णे विस्तृतत्वाच्छत्रं विरचय॥ लग्नकालसांनि
ध्यायस्य यस्यैव शीघ्रं यद्यत्कार्यं निर्माणे नैपुण्यं तेन तेनैव तत्तत्कार्यकर्तव्यं न तु प्रतिनियतकेनचित्किं विदितित्वराविशेषस्य च कार्यद्यो

र.त.
८०

यद्यपि भेद्यलिंगः स्त्रके व्यालः पुंसि श्वापदसर्पयोरिति कोशात् व्यालशब्दः श्वापदसामान्यवाची तथापि प्रकृते कुंभीन्द्रकर्णैरिति विशेष समभिव्याहारादश्वरूपविशेषपरो दृष्टव्यः॥ क्वचित्तु वाजिपृष्ठैरित्येव पाठः॥ चामरं तनुतं॥ छिकर्तकस्योभयत्रस्ममरोद्धननस्यैकपदार्थ त्वावगतये द्विवचनांतक्रियापदसमभिव्याहारेणैकवचनांतकर्मपदं॥ प्रचंडेरुग्रदर्शनैर्मुंडैर्मौलांसूजगाजजघनैरश्वैस्तरलाञ्चंमडपं संस्थान विशेषं योजयस्व॥ अंभेनीं राजनायाविधिंवपूर्वराद्रस्यकक्रियाविशेषात्मकलोकाचारं कलयेत्यर्थः॥ अत्र रसाश्रयो दृष्टापुरुष आसेव्य इत्य ग्रेव्यक्तीभविष्यति॥ अद्भुतं लक्षयति॥ लक्षणांतरमाह॥ तंविभजते॥ स्वसमानाधिकरणविभावालंबनत्वं स्वाश्रयालंबनत्वं वा स्वनिष्ठत्वं॥ स्व्य

अंभेनीं राजन्यायाः कलयविधिमिति प्रेत्तकूद्वांगनानामालापः कुंडलिन्यास्तनयपरिणयारंभजन्मा बभूव॥ विस्मयस्य समुत्प
छिरद्भुतः॥ सर्वेंद्रियाणां ताटस्थ्यं वा॥ वर्णोऽस्य पीतो देवतं ब्रह्मा॥ स च स्वनिष्ठः परनिष्ठश्च॥ स्वनिष्ठो यथा॥ लीलानिबद्धपाथोधि
र्हेलाहतदशाननः॥ स रामः सीतयाश्लिष्टमात्मानं बहु मन्यत॥ परनिष्ठो यथा॥ त्यक्त्वा जीर्णदुकूलवद्वसुमतीं बद्धांबुधिर्विंदुवद्वा
णाग्रेणाजरत्कपोतकद्रवव्यापादितो रावणः॥

धिकरणविभावालंबनत्वं स्वाश्रयान्यालंबनत्वं वा परनिष्ठत्वमिति बहुधोक्तमेवात्रापि बोध्यं॥ स रामः सीतयाश्लिष्टमात्मानं बहु मन्यत सकः॥ यो लीलानिबद्धपाथोधिः पुनः स कः॥ यो हेलाहतदशाननः॥ पूर्वार्द्धे द्वितीयांतपाठे तु स प्रसिद्धो रामो लीलानिबद्धपाथोधिमपि हेलाहतदशाननमपि चात्मानं सीतयाश्लिष्टं बहु मन्यते ति विधिविशेषणीभूतसीतेत्यादेरुद्देश्य तावच्छेदकतया पूर्वार्द्धोपात्तविशेषणद्वयं योजनीयं तथा च यया सीताश्लेषेणाविस्मितो भूत्तथान केनापीति भावः पाठद्वयेपि पूर्ववत्सतिः॥ अत्र रघुनंदनस्य चरितं श्रुत्वा को वा जनो न रोमांचति॥ रोमांचमाचरतीति रोमांचः॥ सोस्यास्तीति यद्वा रोमांचमिवाचरतीति किं वा चतीयं चोरोमांचामन्व इति रोमांच

नौका

राम:
८०

शब्दनिष्पत्तावाचारक्विपि रोमांचतीति रूपनिष्पत्तेः संजातपुलकोनभवतीत्यर्थः॥ एवं किंतदाहत्यक्तेति॥ जीर्णदुकूलवन्ममताना
लिंमितत्वाद्दसुमतीत्यक्तांबुधिर्बिंदुवदनायासबंधनाद्दुःकृतसेतुः बाणाग्रेण जरत्कपोतकइवदुर्बलत्वाद्द्रावणोव्यापादितः काप्य
परिमितसंपच्छालिन्यपिलंकामुद्रेवाल्पत्वाभिमानाद्विभीषणाय विभीषणमाश्वासयितुंसहसाप्रथमदर्शनएवहस्तेर्पितानन्तुप्रति
ज्ञामात्रमित्यादीत्यर्थः॥ अद्भुताएवाद्भुतरसाभिव्यंजकाएव॥ एषकोलावतारोवराहतनुर्हरिः सतांसाधूनांहितायभूयात्॥ कएषः भूम्यु
द्धारप्रसंगेसिंधौमज्जनाज्ज्ञातंक्लेशमपास्ययस्यदशनप्रातेदंताग्रस्थितायाभुवः॥ अत्रताराकतंकहारसदृशाचायानुगुण्यंपस्थितोबाधपि

लंकाकापिविभीषणायसहसामुद्रेवहस्तेर्पितास्त्वेवंरघुनंदनस्यचरितंकोवानरोमांचति॥ अत्युक्तिभ्रमोक्तिचित्रोक्तिविरो
धाभासप्रभृतयोद्भुताएव॥ अत्युक्तिर्यथा॥ भूयादेषसतांहितायभगवान्कोलावतारोहरिः सिंधोः क्लेशमपास्ययस्यदशनप्राते
स्थितायाभुवः॥ ताराहारतिवारिदस्तिलकतिस्वर्वाहिनीमाल्यतिक्रीडादर्पणतिस्मपापतिरहर्देवश्चताटंकति॥ यथावा॥ दिव्य
हरमुखकुहरे विस्तीर्णपर्णतिव्योम॥ चूर्णतिचंद्रः क्रमुकतिकनकगिरिः खदिरसारतिखरांशुः॥

तुंक्लेशमपास्यस्थितायाइत्युक्तं॥ अ
त्यथास्थितायास्तक्लेशायाइस्थैवावस्थितत्॥ तेनभगवत्संश्रयणमात्रस्यसकलक्लेशापासनफलोपधायकत्वरूपेकार्यकारणव्यतिक्रमस्यव्यंग्यभग
वत्संसाहाय्यमाचरतीतिबोध्यं॥ तारानक्षत्रमालाहारस्युज्वलमणिहारवदाचरतिवारिदोमेघस्तिलकतितिलकरूपोभवतिस्वर्वाहिनीगंगामा
ल्यतिस्रक्त्वात्पुष्पमालारूपाभवतिसपापतिश्चंद्रः क्रीडादर्पणतिलीलामुकुरायते॥ हर्देवः सर्पस्ताटंकतिस्वर्णवर्णत्वादित्यर्थः॥ अत्युच्चैरुद्धरणाभिप्रा
यमद्भुतातव्यवर्णनमिदंतत्ररतिभावांगतायामपरितुष्यन्नाविष्णुः पृथिवीपतिरित्यनुसारेणदीपस्यव्यवहारोचितंप्रसंगात्परस्परं विष्णुपृथिव्योरनुरागा

दित्यहरेः क्रोडावतारस्य विस्तीर्णमुखकुहरे मुखरंध्रे व्योमपर्णतिनागवल्लीदलीयत्स्वल्पपरिमाणवत्तया प्रतीयमानत्वाच्चंद्रश्चूर्णमिति चूर्णस्था
नाभिषिक्तं भवति पर्णैकदेशं गुप्तसंघटितचूर्णसंस्थानतुल्यार्धपरिमाणवत्तया प्रकाशमानत्वात्॥ कनकगिरिः क्रमुकमिति पौंटाय्यते तत्तु
ल्यपरिमाणताध्यन्त्सायात्खरांशुः सूर्यः खदिरसारमिति मुखांतर्गतजगद्रंजकत्वादित्यर्थः॥ हेरंबस्य गणपतेः दंतमिति दंतस्य शिखरमिव शि
खरमग्रभागस्तस्य॥ एतेन दंतस्य पर्वतसारता प्रकाशिता॥ अतएव दंतएव शिखरमिति व्याख्या शिखरसारता प्रत्यायिका ह्युपेक्षिता॥ व्या
पार उत्कीर्णनानकूलस्तत्र यो लीलारसः प्रीत्यतिशयः स पुनातु मनोगोचरीभूय पवित्रीकरोतु॥ कथंभूतस्य हेरंबस्य पंकेति॥ पंकेषु स्थल मुद्र

भ्रमोक्तिर्यथा॥ तीव्रेस्तिग्मरुचः करैः परिचितां सेकं कपोलस्थलीं नीराणां निकरं करेण हरता नुक्षीकृते वारिधौ॥ मैनाकं समु
द्रीस्यपंकयति तं शालूकशंकाजुषो हेरंबस्य पुनातु दंतशिखरव्यापारलीलारसः॥ यथा वा॥ अंतः क्रोधाग्निजाग्रत्कपटनरहरि
स्फारनिश्वाससवातव्याधूतावारिवाहाः कुलधरणिभृतः सानुषु प्रस्खलंतः॥

कर्दमे पतितं मैनाकं मैनाकनामकं हिमालयतनय
मुद्रीस्य शालूकेति॥ शालूकं कंदविशेषस्तस्य शंकासंशयस्तं जुषते धत्ते तस्येत्यर्थः॥ कस्मिन्सति तीव्रैरतिशयेनोत्सैस्तिग्मरुचः खरांशोः करैः
किरणैः परिचितां संबद्धां तप्तामिति यावत्कपोलस्थलीं गंडस्थलीं सेक्तुं नीराणां निकरं हरता करेण शुंडादंडेन नीरधौ समुद्रे तुच्छीकृते शुष्की
कृते सतीत्यर्थः॥ एकत्रैव विषयेकर्तृभेदेन नानाधर्मारोपरूपां भ्रांतिविच्छित्तिविशेषां योदाहरति॥ मनः संस्थितक्रोधरूपेणाग्निना जाग्र
तः प्रादुर्भूताद्यैकपटनरहरेर्धर्तावतारस्य नृसिंहस्य स्फारबहुलीभूतानि श्वासवातास्तैर्व्याधूताः क्षिप्ताः कुलधरणिभृतः कुलाचलस्य सानु
षु शिखरेषु प्रस्खलंतो वारिवाहा मेघा दिङ्नागैर्दिग्गजैर्नागबुद्ध्या हस्तिभ्रांत्या वनहरिणकुलैः शाद्वलानां नडशादाद्वलचहरित्तृणाढ्यस्थलीनां

शंकया किराते र्भिल्लै रुल्लाभिभूतैरितियावच्छायाभ्रांत्या स्वर्वधूभिरप्सरोगणैः शितिवसनधिया समुपास्यमानकृत्तिवासो बुद्ध्या वीक्षिताः॥
तेषां तेषां प्रबलाभिलाषस्यैव प्रबलहेतुस्यापि संस्कारोद्बोधकत्वात्तत्तदभिलाषादिस्तत्तदारोपे हेतुरिति हृदयं॥ गिरिस्तेनाध्यवसितं
कुचमंडलं मौक्तिकावलिं तत्तेनाध्यवसितां स्वेदबिंदुरचनां वमत्युद्गिरति॥ अलिहूयं तत्तेनाध्यवसितं लोचनयुगलं स्यावरं निश्चेष्टं॥ शर
त्तुहिनदीधितिरुद्गत प्रकाशात्तत्तेनाध्यवसितं मुखं व्यजनमारुतं मध्यम ध्येस्तंभनात्तत्तेनाध्यवसितं म्यासं वांछति संधत्ते॥ मान्मथं कार्मु
स्यधनुस्तत्तेनाध्यवसितं भ्रुकुटियुगं स्वपिति नाटस्थ्यं भजते॥ अंधतमोऽतिनैल्यात्तत्तेनाध्यवसितः केशपाशः शिथिलबंधगलितबंधनं

दिङ्नागैर्नागबुद्ध्या वनहरिणकुलैः शंकया शाद्वलानां छायाभ्रांत्या किरातैः शितिवसनधिया वीक्षिताः स्वर्वधूभिः॥ चित्रोक्ति
र्यथा॥ गिरिर्वमति मौक्तिकावलिमलिद्वयं स्थावरं शरत्तुहिनदीधितिर्व्यजनमारुतं वांछति॥ धनुः स्वपिति मान्मथं शिथिल
बंधमंधतमोऽमनमोमनसिजायने किमपि कौतुकं तन्वते॥ लाक्षणिकमखिलं चित्रोक्तिरेव॥ भवतीति किमपि स्वस्वानुभवैकवेद्यं

कौतुकं चमत्कारं तन्वते तेमनसिजायनमो नन्यसाधारणकलापात्त्वादित्यर्थः॥ सारोपलक्षणापि चित्रोक्त्यंतर्गतैव नातिरिक्तेत्या
ह॥ सारोपसाध्यवसानभेदभिन्नलक्षणासंबंधिपदघटितवाक्यसामान्यमित्यर्थः॥ यथा मम॥ कुचकनकगिरिप्रांतः स्वेदांभो मौक्तिका
क्रांतः॥ तव निधुवनपांडित्यपिशुनयितुमयं विपर्ययो जातः॥ यथा वा ममैव॥ अयि नीलांशुकवृंते निर्मलदंतांशुकेसराकीर्णे॥ लीलासि
भृंगमालिनि कांते वासंतिकासिकस्यापि॥ प्रागन्वयाननुगुणतेवात्र सामान्यधर्मप्रयोगोऽप्युपमितसमासबाधकोऽस्तीति पूर्वस्माद्विशेषः॥ य
वमुपमितसमासेन्वयसामंजस्येप्युक्तलक्षणादृश्यते॥ यथा मम॥ वलिनिःश्रेणि स्तनयुगचक्रे रोमालिशैवाले॥ नयनयुगलारविंदे कामिनि सरसी

हेमुकुंदतवक्कोप्यसौसर्वलोकप्रसिद्धप्रभावोनंदकःखड्गःकंससंपदोऽनंदकोनाशकइतिशब्दकृलात्प्रतीयमानविरोधसमाधानशिरस्को
विरोधाभासः॥अत्रनिंदकइतिपाठकल्पनाकुकल्पनैवेतिप्रतिभाति॥वास्तविकस्यैवापाततोपिविरोधस्फुरणस्याभावेनानुदाहरणत्वप्रसं
गात्॥हेमुकुंदत्वंकुंडलीकर्णभूषणभागसिसामीप्यभजसेकालियंकालियनामानंकुंडलिनंकुतःकिमुद्दिश्यदूरतोनयस्यपसारयसितद्वि
त्येवंरूपजिज्ञासाविषयरूपंप्रयोजनंनिवेदयकथयेत्यर्थः॥कुंडलिसामान्यापाकरणसमुद्देश्यकेनामुनाव्यापारेणकुंडलिसामान्या
पाकरणस्यतवसामीप्येऽसंभवादितिविरोधाव्यालसामान्यापाकरणसंभवादाभासरूपइति॥परंतुहृदयारव्यानंदरूपत्वेतिप्रागुक्तत
त्रानंदमयशृंगारादिप्रधानकाव्यनाट्ययोःसहृदयानांप्रवृत्तिसंभवेपिदुःखमयकरुणादिप्रधानयोस्तयोःकथंतेषांप्रवृत्तिरितिविशेषतः

विरोधाभासोयथा॥कोप्यसौनवमुकुंदनंदकोऽनंदकोभवतिकंससंपदः॥कुंडलीत्वमसिकालियंकुतोदूरतोनयसितन्निवे
दय॥नाट्येचसर्वेरसाआनंदरूपाअद्भुताख्याःपरनिष्ठाएव॥ शंकामपाकरोति॥चकारःकाव्यसमुच्चायकः॥यद्यपिप्राग्वद्दृशोरि

तिवक्तुंयुक्तं॥अन्यथाकाव्येचेत्यत्रकिंनकृतमितिनियोगप्रसंगात्तथापिनाट्यरसेविशेषंवक्तुमित्थमभिहितं॥सर्वेरसाअनुपदंनिरूपि
ताअष्टावपि॥आनंदरूपाःकाव्यइवानंदरूपाएव॥वैशेषिकाणांपदपस्यकानुमानइवपरस्परंदृष्टांतदार्ष्टांतिकभावोपिसुसिद्धएव॥उभ
यत्रतथाविप्रति॥न्नस्यप्रतिपाद्यत्वेपिनकाविदूनोक्तिस्तेनविना॥अत्रकविसुस्तकेनाट्येवेतिपाठःसतुकुजुरेव॥इवार्थकवशब्दस्याप्रिम
हाकविनिबद्धत्वात्॥काव्यात्मनउपमेयस्यप्रस्तुतत्वादेवलाभाच्च॥एतेनसकलरसाभिव्यंजकतयाकाव्यमेवोत्तममितितदेवप्रस्तुतमुप
मेयंयुज्यतेननाट्यमितिप्रजल्पन्समाहितइतिपुनरपव्याख्यानं॥परनिष्ठाएवेत्यस्यतथापाठेविरूद्धमतिकारकत्वापत्तेः॥रसाधिकास्सोत्व

नास्त्येव शांतरसो नास्तीत्यत्रापि ग्रंथकृन्निर्भरे साधकाभावाच्चेत्यनुपदं व्यक्तीभविष्यति॥ न तु लोकस्वभावादविवेके च न दुःखरूपा अर्थास्यवधारं
णार्थः॥ तच्च वितती कृतमधस्तात्॥ अद्भुतास्याः विस्मयाव्यभिचारिणः॥ परनिष्ठा एव नटातिरिक्तसामाजिकगता एव एवकारेण काव्ये
तु कविषु सहृदयेष्वपि वर्तेत इति संचितं॥ नटस्यानुकारित्वनियमात्॥ कवेः सहृदयांतःपातित्वावश्यंभावादिति हृदयं॥ नात्यभिन्नवक्त
व्यशांतरसप्रतिद्वंद्वितया मायारसं व्यवस्थापयितुं भूमिकामारचयति॥ उपादेयतामतिर्हेयतामतिश्चेत्यर्थः॥ प्रतिभातीति॥ वक्तुं युज्यत
इत्यर्थः॥ अमंगलप्रायस्य निर्वेदस्य सर्वव्यभिचारिप्राथम्यसमाक्षिप्तवक्ष्यमाणोद्देशपाठदृढीकृतमुनिनानातास्थायिकः शांतरसस्तन्मता
नुसारिभिः संगीतरत्नाकरादौ व्यवस्थापितः॥ पूर्वे पूर्वाचार्यानुभवसंवाद्यनुभवस्य शरणीकरणीयत्वात्॥ मायारसस्तु न तथानुभवसि

चित्तवृत्तिर्द्वैधा प्रवृत्तिर्निवृत्तिश्च॥ निवृत्तौ यथा शांतरसस्तथा प्रवृत्तौ मायारस इति प्रतिभाति॥ एकत्र रसोत्पत्तिरपरत्र नेति
वक्तुमशक्यत्वात्॥ न च सरतिरेव॥ तर्हि सकस्यास्तु व्यभिचारी॥ न शृंगारस्य॥ तद्वैरिणो बीभत्सस्यापि तत्र सत्वात्॥ द्धः॥ वक्ष्यमा

णमायारसोदाहरणे तु देवादिविषयकत्वाद्रतिर्भाव एव न रस इति मुनिवचोगौरवाद्यामित्यभिप्रेत्य प्रतिभातीत्युक्तं॥ तथा च युक्तिसाम्यादा
धुनिकानुभवस्य विनिर्गंतुमशक्यत्वाद्योराधिक्ये प्रसक्तेऽपि भरततात्पर्यानुसारिभिः प्राचीनैः सर्वसंवाद्यनुभवाद्यतः शांतः स्वीकृतो न मा
यारसः॥ स्वातंत्र्यालंबने बहूपप्लवापत्तेरिति भावः॥ व्यभिचारिण्या रसेनोपपन्नो किमतिरिक्तरसकल्पनेनेत्याशंकते॥ रसांतरकल्पनां विना
व्यभिचारितापि न संभवति रसव्यंजकत्वस्य तद्दृढकत्वादित्याशयेनोत्तरयति॥ क्रुध्रव्यभिचारित्वमपाकरोति॥ तत्र हेतुमाह॥ न च विरुद्ध
योर्हेयोरेकस्मिन्संस्थितिः॥ तथा च बीभत्ससंचारिनप्रबुद्धमिथ्याज्ञानवासनाभिव्यक्तिस्थले शृंगारस्यानास्वाद्यतया न तत्र शृंगारव्यभिचारि

र.त. ८२

हेमुकुंदत्वं कोप्यसौ सर्वलोकप्रसिद्धप्रभावोनंदकः स्वद्रूः कंससंपदोऽनंदकोनाशकइतिशब्दच्छलात्प्रतीयमानविरोधसमाधानशिरस्को
विरोधाभासः॥ अत्रनिंदकइतिपाठकल्पनाकुकल्पनैवेतिप्रतिभाति॥ वास्तविकस्यैवापाततोपिविरोधस्फुरणस्याभावेनानुदाहरणत्वप्रसं
गात्॥ हेमुकुंदत्वंकुंडलीकर्णभूषणभागसिसामीप्यंभजसेकालियंकालियनामानंकुंडलिनंकुतः किमुद्दिश्यदूरतोनयस्यपसारयसितदि
त्येवंरूपजिज्ञासाविषयरूपंप्रयोजनंनिवेदयकथयेत्यर्थः॥ कुंडलिसामान्यापाकरणसमुद्देश्यकेनामुनाव्यापारेणकुंडलिसामान्या
पाकरणस्यतवसामीप्येऽसंभवादितिविरोधाभ्यालसामान्यापाकरणसंभवादाभासरूपइति॥ परंतुद्वयोरप्यानंदरूपत्वेतिप्रागुक्तंन
त्रानंदमयशृंगारादिप्रधानकाव्यनारव्ययोः सहृदयानांप्रवृत्तिसंभवेपिदुःखमयकरुणादिप्रधानयोस्तयोः कथंतेषांप्रवृत्तिरितिविशेषतः

विरोधाभासोयथा॥ कोप्यसौनवमुकुंदनंदकोऽनंदकोभवतिकंससंपदः॥ कुंडलीत्वमसिकालियंकुतोदूरतोनयसितन्निवे
दय॥ नास्त्येवसर्वेरसाआनंदरूपाअद्भुतारव्याःपरनिष्ठाएव॥

शंकामपाकरोति॥ चकारःकाव्यसमुच्चायकः॥ यद्यपिप्राग्वद्दुःखोरि
तिवक्तुंयुक्तं॥ अन्यथाकाव्येवेत्यकिंनकृतमितिनियोगप्रसंगात्तथापिनास्त्यरसेविशेषंवक्तुमित्थमभिहितं॥ सर्वेरसाअनुपदंनिरूपि
ताअष्टावपि॥ आनंदरूपाःकाव्यइवानंदरूपाएव॥ वैशेषिकाणांपटपरसकानुमानइवपरस्परंदृष्टांतदार्ष्टांतिकभावोपिसुसिद्धएव॥ उभ
यत्रतथाविप्रति ॥ नस्यप्रतिपाद्यत्वेपिनकाविदूनोक्तिस्तेनविना॥ अत्रकविसुस्तकेनास्त्येवेतिपाठःसतुकजुरेव॥ इवार्थकवशब्दस्याप्रिम
हाकविनिबद्धत्वात्॥ काव्यात्मनउपमेयस्यप्रस्तुतत्वादेवलाभाच्च॥ एतेनसकलरसाभिव्यंजकतयाकाव्यमेवोत्वणमितितदेवप्रस्तुतमुप
मेयंयुज्यतेननाट्यमितिप्रजल्पन्समाहितइतिपुनरपव्यारव्यानं॥ परनिष्ठाएवेत्यस्यतथापाठेविरुद्धमतिकारकत्वापत्तेः॥ रसाधिकस्सोत्व

नौका

रामः
८२

नास्त्येव शांतरसो नास्तीत्यत्रापि ग्रंथकृन्निर्भरे साधकाभावाच्चेत्यनुपदं व्यक्तीभविष्यति॥ ननु लोकस्वभावादाविवेकेवन दुःखरूपाअर्थास्यवधार
णार्थः॥ तच्च वितती कृतमधस्तात्॥ अद्भुतारस्याः विस्मयायव्यभिचारिणः॥ परनिष्ठा एव न दातिरिक्तसामाजिकगता एव एवकारेण काव्य
तुकृविषु सहृदयेष्वपि वर्ततेतइति सूचितं॥ न रस्यानुकारित्वनियमात्॥ कवेः सहृदयांतःपातित्वावश्यंभावादिति हृदयं॥ नात्यभिन्नवक्त
व्य शांतरसप्रतिद्वंद्वितया मायारसं व्यवस्थापयितुं भूमिकामारचयति॥ उपादेयता मति हेयता मतिश्चेत्यर्थः॥ प्रतिभातीति॥ वक्तुं युज्यत
इत्यर्थः॥ अमंगलप्रायस्य निर्वेदस्य सर्वव्यभिचारिप्राथम्यसमासिप्रवक्ष्यमाणोद्देशपाठदृढीकृतमुनिनातात्पर्यकः शांतरसस्तन्मता
नुसारिभिः संगीतरत्नाकरादौ व्यवस्थापितः॥ पूर्वे पूर्वाचार्यानुभवसंवाद्यनुभवस्य शरणीकरणीयत्वात्॥ मायारसस्तु न तथानुभवसि

चित्तवृत्तिर्द्वेधा प्रवृत्तिर्निवृत्तिश्च॥ निवृत्तौ यथा शांतरसस्तथा प्रवृत्तौ मायारस इति प्रतिभाति॥ एकत्र रसोत्पत्तिरपरत्र नेति
वक्तुमशक्यत्वात्॥ न चैवं रतिरेव॥ तर्हि सकस्यास्तु व्यभिचारी॥ न शृंगारस्य॥ न हि विणाबीभत्सस्यापि नत्र सत्वात्॥ द्धः॥ वक्ष्यमा

णमायारसोदाहरणे तु देवादिविषयकत्वाद्रतिर्भाव एव न रस इति मुनिवचो गौरवाद्धा अभिनवाभिप्रेत्य प्रतिभातीत्युक्तं॥ यथा च युक्तिसाम्याद्रा
धुनिकानुभवस्य विनिगंतुमशक्यत्वादुभयोराधिक्ये प्रसक्ते पि भरततात्पर्यानुसारिभिः प्राचीनैः सर्वसंवाद्यनुभवाधानः शांतः स्वीकृतो न मा
यारसः॥ स्वातंत्र्यालंबने बहूपप्लवापत्ते रितिभावः॥ व्यभिचारिण्यारसेवोपपत्तौ किमतिरिक्तरसकल्पनेनेत्याशंकते॥ रसांतरकल्पनां विना
व्यभिचारितापि न संभवति रसव्यंजकत्वस्य तद्दृढकत्वादित्याशयेनोत्तरयति॥ कुत्रव्यभिचारित्वमपाकरोति॥ तत्र हेतुमाह॥ न च विरुद्ध
योर्द्वयोरेकस्मिन्संस्थितिः॥ तथाच बीभत्ससंचारिन प्रवुद्धमिथ्याज्ञानवासनाभिव्यक्तिस्थले शृंगारस्यानास्वाद्यतयानतत्र शृंगारव्यभिचारि

अतएवस्वविरोधित्वावच्छेदकबीभत्ससामानाधिकरण्यतुल्यशृंगारसामानाधिकरण्यादेव॥एवमग्रेपि॥व्यभिचारिन्यायेनभुज्यमान
रत्यादीनामेवमायारसत्वंरसन्यायेनभुज्यमानानांतुतेषांशृंगारादित्वं॥अतएवमायारसइतिरससामान्याभिधाविशेषाभिधाशृंगारे
त्यादीत्याशंकते॥वाच्यमितिशेषः॥तथाचोक्तस्थलेबीभत्सस्यास्वाद्यत्वेतत्संचारिणीजुगुप्सेवशृंगारादेरास्वाद्यत्वेतत्संचारीरत्यादिरेव
प्रबुद्धमिथ्याज्ञानवासनाभिव्यक्तिंगतार्थयतीतिभावः॥स्थापितयानुभूयमानप्रबुद्धमिथ्याज्ञानवासनायाविद्युदुद्योतप्रायत्वमद्रस

अतएवनबीभत्सस्यापि॥नहास्यस्य॥तद्वैरिणःकरुणस्यापितत्रसत्त्वात्॥अतएवनकरुणस्यापि॥नरौद्रस्य॥तद्वैरि
णोद्भुतस्यापितत्रसत्वात्॥अतएवनाद्भुतस्यापि॥नवीरस्य॥तद्वैरिणोभयानकस्यापितत्रसत्वात्॥अतएवनभयानकस्या
पिनापिशांतस्यतद्विरोधित्वात्॥नचसामान्यएवरसस्तद्विशेषाइतरेभवंतीति॥शांतरसस्यतर्हिरसाभावत्वापत्तेः॥किंतु
विकृतएव॥रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयास्तत्रोत्पद्यंतेविलीयंतेच॥तेनतत्रतेव्यभिचारिणइति॥ल
क्षणंचप्रबुद्धामिथ्याज्ञानवासनामायारसइति॥मिथ्याज्ञानमस्यस्थायिभावः॥ स्थायिभिरन्यथासिद्धोजगद्विषयहेयताबुद्धि

वासनायास्तथाविधायाअपितथाविधेनहर्षादिनान्यथासिद्धिःस्यात्तदिदमुक्तमेकत्ररसोत्पत्तिरपरत्रनेतिवक्तुमशक्यत्वादिति॥त
याचशांतस्यरसविशेषतासर्वाभिमताविलीयेतेत्युत्तरयति॥तस्मान्मायारसोधिकएवरत्यादयस्तस्यव्यभिचारिणइत्युपसंहरति॥विकृ
तएव॥अतिरिक्तोविलक्षणएवरसइत्यर्थः॥विद्युतइवेतिपाठेननुमायारसस्थलेरत्यादिप्रतीतेःकागतिरतआहेतिकिंत्विस्यवतार
णीयं॥तेनोत्पादविलयाभ्यांविद्युत्प्रायत्वेन॥तंलक्षयति॥प्रबुद्धाफलिता॥मिथ्याज्ञानमित्यस्यमिथ्याज्ञानवासनेत्यर्थोत्रलक्षणवाक्ये

लाटीलाटदेशस्त्रीतस्याः गेवांभोरुहं गंधवहप्रेरितत्वात्तस्यरभसोवेगस्तं चल्यमिति यावत्तस्य कर्त्री फलपुष्पसमृद्धे रीदृशी वाटी वाटिका
तिष्ठति कापि कांतानाम मनोविश्रामहेतुः सरोजसारंगादिप्रतिपत्तेरीदृशी वापिका तिष्ठति तत्स्य पर्यंकश्चंद्रानुकल्पं कामिनी प्रकटयतीति
योज्यं नेमल्यमार्दवादिसंपत्तेरेतेनोपभोगसाधनसंपत्तिकारकादृष्टरूपोद्दीपनविभाव उक्तः॥ कामिनी कामनीतिं कामक्रीडां मिथः परस्प
रं प्रकटयति॥ एतावता षडिंद्रियजन्यनिर्वृतिलक्षणः शृंगाररूपोव्यभिचारी सूचितः॥ कामानुरूपं मनोभिलषितरूपमाकृत्यादि कामि
नी प्रकटयतीत्यन्वयः॥ एतेन कामिन्यात्यात्मबुद्धिरूपमिथ्याज्ञानवासनाया आलंबनविभावो दर्शितः॥ अथोपादेयतामतिरूपमनु

विभावाः सांसारिकभोगार्जकधर्माधर्माः॥ अनुभावाः पुत्रकलत्रविजयसाम्राज्यादयः॥ यथा॥ वाटीलाटीदृगंभोरुहरभ
सकरी वापिका कापिकांता तल्पं चंद्रानुकल्पं प्रकटयति मिथः कामिनी कामनीतिं॥ रूपं कामानुरूपं मणिमयभवनं बंधु
रं बंधुरागो लोके लोकेश कस्त्वमसि न भवने सर्वदा सर्वदाता॥ आवंदर्शयति मणिमयभवनं बंधुरमुन्नतानतं सुंदरं तु सेवनीय

मिति यावत्॥ कृतमस्तीति शेषः॥ एतेन धनसंपत्तिरुक्ता॥ बंधुरागो बंधुजनप्रीतिः स्वयं संपादितास्तीति शेषः॥ एतेनाभिजनसंपत्तिरु
क्ता॥ हे लोकेश लोकस्य पंसो लोके सर्वदा भवने सर्वदाता नास्मि तु त्रैलोक्ये विद्यमानानां सर्वेषामेव पुंसां यथाकालमनायासेनैव सर्वदाता
सीत्यर्थः॥ अत्र यथोक्तविभावादिसंयोगादभिव्यज्यमाना कृत्युभितनायकगता मिथ्याज्ञानवासनामायारसइति बोध्यं॥ न चास्तु न हि प्र
धान्येनाभिव्यज्यमानो भावो रसमपेक्षते॥ तथासतिरसस्यैव प्राधान्यापत्त्याभावध्वनिविलोपप्रसंगात्॥ तस्मात्सकसेसादिविकल्पान
वकाशाद्व्यभिचारिणी रतिर्मायारसंगतार्थ पतीत्याहुः॥ तन्न॥ विभावानुभावव्यक्तस्यापि च वै

गायाइवस्वातंत्र्येण तथाविधव्यभिचारित्वेनायामपि निरुक्तानंदांशावरणाज्ज्ञाननिवर्तनसमर्थो लौकिकव्यापारफलोपधायकत्वक
ल्पनेगौरवात्॥ प्रांतेरसाभिव्यक्तेरभ्युपगमेतु क्लृप्तसामग्र्येव निर्वाहात्॥ परंतु पानकरसन्यायेनचर्व्यमाणत्वान्मनोभावचमत्कारप्र
कर्षोद्भावध्वनिव्यवहारः॥ रसस्तु तत्र व्यज्यमानोपि न तथा चमत्कारहेतुरिति न रसध्वनिरेष॥ अतएव वात्सल्यादीनां नतेतेरसाः सं
चार्यंते यथा प्राग्दर्शिताः॥ रसेह्यानंदांशाविनाभावस्यधर्मिग्राहकमानसिद्धत्वाच्चमत्काररहितरसव्यक्तौमानाभाव इतितु विवादग्रस्तमे
वप्राचां॥ कथमन्यथापरमुखंरसमेतेनुमन्यंते॥ तथाहि॥ अलंकारेचरुचिरेचित्तविश्रांतिकारिणि॥ अलंकारस्यमुख्यत्वंगौणत्वंरसभाव
योरिति॥ तस्मात्स्वाचामायारसोनपदार्थएवेतिग्रंथकृदाशयः॥ नास्त्यभिन्नेपरमिति॥ आदिकाव्येतिहासादौ त्विदर्थः॥ नवम इति॥ नन्व

नास्त्यभिन्नेपरं निर्वेदस्थायिभावकः शांतोपि नवमो रसो भवति॥

शांतरसस्यातिरेके किंमानमितिचेत्॥ मुनिवचनं॥ तद्यथा॥ शृंगारः करुणः शांतो रौद्रो वीरोद्भुतस्तथा॥ हास्यो भयानकश्चैव बीभत्सश्चेति
तेनवेति॥ नटेशमाभावान्नाट्येगीतवाद्यादीनां विषयवैमुख्यात्मकशांतरसविरोधिनांसत्त्वाच्चनतत्रशांतरससंभवइत्याशयेनोक्तंना
स्त्यभिन्नइति॥ तदुक्तं॥ शांतस्यशमसाध्यत्वान्नटेचतदसंभवात्॥ अष्टावेवरसानाट्येनशांतस्तत्रयुज्यतइति॥ नव्यास्तुनटेशमाभावा
दितिहेतुरसंगतः॥ नटेरसाभिव्यक्तेरस्वीकारात्॥ सामाजिकानांचशमवत्त्वेनतेषांरसोद्बोधेबाधकाभावात्॥ नचनटस्यशमाभावात्तद
भिनयप्रकाशकत्वानुपपत्तिरितिवाच्यं॥ तस्यभयक्रोधादेरप्यभावेनतदभिनयप्रकाशकतायाअप्यसंगत्यापत्तेः॥ यदिचनटस्यक्रोधादे
रभावेनवास्तवतत्कार्याणांवधबंधादीनामुत्पत्त्यसंभवेपिकृत्रिमतत्कार्याणांशिक्षाभ्यासादिनउत्पत्तौनबाधकमस्तीतिसूक्ष्मदृशानिरी

स्यतेनतदाप्रकृतेपितुल्यवदिदंज्योतिःकुतोहेतोस्तरलितमतिसूक्ष्मसारिणोपि॥नचनाट्येगीतवाद्यादीनांविरोधिनांसत्त्वात्तामाशि
केष्वपिविषयवैमुख्यात्मनःशांतस्यकथमुद्रेकइतिप्रागुक्तंशंक्यं॥नाट्येशांतरसमभ्युपगच्छद्भिःफलबलाद्गीतवाद्यादेस्तस्मिन्विरो
धितायाअकल्पनात्॥विषयचिंतासामान्यस्यतत्रविरोधित्वस्वीकारेतुतदीयालंबनस्यसंसारानित्यत्वस्यतदुद्दीपनस्यपुराणश्रव
णादेरपिविषयत्वेनविरोधितापत्तेः॥अतएवसंगीतरत्नाकरेचरमाध्याये॥अष्टावेवरसानाट्येष्वितिकेचिदचूचुदन्॥तदचारुय
तःकंचिन्नरसंस्वदतेनटइत्यादिनानाट्येपिशांतरसोस्तीत्यवस्थापितमित्यन्यत्रविस्तरइतिप्राहुः॥यैरपिनाट्येशांतरसोनास्तीत्य
भ्युपगम्यतेतैरपिबाधकाभावान्महाभारतादिप्रबंधानांशांतरसप्रधानतयासकललोकानुभवसिद्धत्वाच्चकाव्येसोवश्यमंगीकर्तव्यस्त

निर्वेदस्यपरिपोषःशांतोरसः॥दोषप्रशमोवादोषाःकामक्रोधादयः॥

त्सिद्धंनःसमीहितमित्येतदभिप्रायकमेवनाट्यभिन्नेपरमित्यत्रकाव्येशांतरसस्यनिर्विवादतासूचकंपरंपदमुपात्तं॥अतएवाष्टौनाट्ये
रसाःस्मृताइत्युपक्रम्यशांतोपिनवमोरसइतिमंमटभट्टाअप्युपसमहार्षुः॥शांतंलक्षयति॥नित्यानित्यवस्तुविचारजन्मनोविषयवि
रागाख्यस्यचित्तवृत्तिविशेषस्येत्यर्थः॥असावेवालंप्रत्ययइत्युच्यते॥अत्रैवविषयेष्वनित्यतामतिरूपंविषयदोषविचारंविभावंवक्ष्यति
॥ननुनिरुक्तनिर्वेदस्यस्थायिभावत्वेशांतेनिखिलविषयपरिहारजन्यात्ममात्रविश्रामानंदप्रादुर्भावमयत्वानुभवविरोधः॥उक्तंतु॥यच्चका
मसुखंलोकेयच्चदिव्यंमहत्सुखं॥तृष्णाक्षयसुखस्यैतेनार्हतःषोडशींकलामिति॥अतएवसर्ववृत्तिविरामोस्यस्थायिभावइत्यपिनिरस्तं॥
अभावस्यस्थायित्वायोगाच्चेत्यभिप्रेत्याह॥सर्वानुभवसाक्षिकःकामक्रोधादिरूपदोषापगमावस्थायामात्ममात्रविश्रामसंभूतानंदइत्य

तस्मान्निर्वेदस्य निरुक्तदोषप्रशमस्य वास्थायित्वमित्युक्तमतभेदेनैवोदाहरणभेदो वसेयः ॥ इदं कुसुमसंपत्तिशालि हर्म्यगृहं हे यमस्थि
रत्वादेतेन विषयदोषबुद्धिरूप आलंबनविभाव उक्तः ॥ निकुंजभवनं श्रयमाश्रयणीयमेतेनौदासीन्यरूपोनुभाव उक्तः ॥ धनं प्रदेयं
रागहेमादिसाधनत्वेनानुपादेयत्वात्तीर्थपयः पेयमनायाससंपत्तेरेतेन हिताहितप्राप्तिपरिहारार्थक्रियाहानिरूपमनुभावांतरमुक्तं
॥ भगवतः षड्विधैश्वर्यादिगुणशालिनः ॥ तदुक्तं ॥ ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ॥ ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणेति ॥
हरेर्विष्णोः पदांभोरुहं गेयमेतेन मतिरूपव्यभिचारिभावः सूचितः ॥ जन्मदर्भशयने विरागयनेयमेतेन तापसदर्शनमुद्दीपनमुक्तं मनोध

अस्य विषयदोषविचारविरक्त्यादयो विभावा अनुभावा आनंदाश्रुपुलकहर्षगद्गदवचनादयः ॥ यथा ॥ हेयं हर्म्यमिदं निकुंज
भवनं श्रेयं प्रदेयं धनं पेयं तीर्थपयो हरेर्भगवतो गेयं पदांभोरुहं ॥ नेयं जन्म विरागदर्भशयने धर्मे निधेयं मनः स्थेयं तत्र सिता
सितस्य सविधे ध्येयं पुराणं महः ॥ यथा वा ॥ वेदस्याध्ययनं कृतं परिचितं शास्त्रं पुराणं श्रुतं सर्वं व्यर्थमिदं पदं न कमलाकांतस्य
चेत्कीर्तितं ॥

र्मे निधेयमेतेन वेदांतश्रवणाद्युद्दीपनांतरमुक्तं ॥ तत्र सितासितस्य गंगायमुनयोः संघातस्य सविधे प्रयागे स्थेयमेते
न तपोवनदर्शनाद्युद्दीपनांतरमुक्तं ॥ पुराणं मह आत्मचैतन्यं ध्येयमेतेन नासाग्रदृष्टिरूपोनुभावो ध्वनित इति ॥ चेत्कमलाकांतस्य पदं
न कीर्तितं तर्हीदमध्ययनादि सर्वं व्यर्थं तज्जन्यफलस्य स्पृहाया विनाशादेतेन निरीहात्मिका विरक्तिरालंबनविभाव उक्तः ॥ आनंदस्य
निर्विषयत्वेपि न हि शेषणप्रशमे सविषयकेच्छाप्रतियोगिकत्वादेवालंबनत्वमत्राध्यवसितमिति बोध्यं ॥ वेदस्य स्वाध्यायस्याध्ययनं गुरु
मुखोच्चारणानूच्चारणमेतेन वेदांतश्रवणाद्युद्दीपनमुक्तं ॥ शास्त्रं परिचितमेतेन मननाद्युद्दीपनांतरमुक्तं ॥ पुराणं श्रुतमेतेन वैराग्यदार्ढ्य

उत्खातं खनितं सदृशीकृतं समीकृतं भूयसांभसा सेको विरचितस्तत्सर्वं निष्फलं भवत्यालवालवलये यदि बीजं न क्षिप्तमेतेन मतिर्व्यभि
चारिभावो ध्वनित इति॥ इति श्रीजडउपनामकगंगारामविरचितायां नौकाख्यायां रसतरंगिणीव्याख्यायां सप्तमस्तरंगः॥ दृष्टय
स्त्रिविधाः स्थायिभावजा व्यभिचारिभावजा रसजाश्चेति संगीतकशास्त्रानुसारात्स्थायिभावभेदनियतभेदा दृष्टीराह॥ ता उद्दिशति॥ व्य
भिचारिभावजा दृष्टीर्विभजते॥ ता उद्दिशति॥ यद्यपि त्रयस्त्रिंशद्भेदा व्यभिचारिभावास्तेषां दृष्टयश्च विंशतिधेति यथायोगं विनियोगान्

उत्खातं सदृशीकृतं विरचितः सेकोंऽभसा भूयसा सर्वं निष्फलमालवालवलये क्षिप्तं न बीजं यदि॥ इति रसनिरूपणं नाम स
प्तमस्तरंगः॥ स्थायिभावजा दृष्टिरष्टधा॥ स्निग्धा हृष्टा दीना क्रुद्धा दृप्ता भीता जुगुप्सिता विस्मिता चेति॥ व्यभिचारिभावजा
दृष्टिर्विंशतिधा॥ शून्या मलिना श्रान्ता लज्जिता शंकिता मुकुला अर्द्धमुकुला ग्लाना जिह्मा कुंचिता वितर्किता अभितप्ता विष
ण्णा ललिता केकरा विकोशा विभ्रान्ता विप्लुता त्रस्ता मदिरा चेति॥ रसभेदादष्टधा रसदृष्टिः॥ कान्ता हास्या करुणा रौद्री वी
रा भयानका बीभत्सा अद्भुता चेति षट्त्रिंशद्भेदा दृष्टयः॥ कुंचिता विकसिता अर्द्धविकसिता चकिता सुप्ता घूर्णिता लसा विवर्ति
ता पर्यस्ता शून्या स्तिमिता चेत्यादयो दृष्टिभेदा ऊहनीयाः॥

भवति तथापि यथा तासां तेषु विनियोगस्तथा संगीतकशास्त्रे प्रतिपा
ईविवर्तिता
दर्शितं तच्च नातीवोपयुज्यत इति दिङ्मात्रेणेहोच्यते॥ यथा म्लाना दृष्टिर्ग्लानावपस्मारे च॥ यथा वा विकोशा मनोगर्वे स्मृतावुग्रतायां च॥
यथा वा विप्लुतोन्मादे दैन्ये चेत्यन्यत्र विस्तरः॥ रसभेदनियतभेदा दृष्टीराह॥ ता उद्दिशति॥ मतान्तरमाश्रित्याह॥ एवं स्त्रीपुरुषयोः प्रकृत्य
वस्थाभेदेनापि दृष्टिभेदास्त्येव परं त्वेवंविधभेदस्य स्वस्वानुभवमात्रवेद्यस्य सर्वसंवादाभावादानैयत्याच्च नासावुट्टंकितः॥ तदुक्तं॥ इत्युक्त

